॥ श्रीः ॥

चौखम्भा राजसेवा ग्रन्थमाला

२४

---

अथ

# ललितासहस्रनामस्तोत्रम्

## नामावलीसहितम्

चौखम्भा ओरियन्टालिया

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

वाराणसी दिल्ली

।। श्रीः ।।

चौखम्भा राजसेवा ग्रन्थमाला

२४

---

अथ

# ललितासहस्रनामस्तोत्रम्

## नामावलीसहितम्

चौखम्भा ओरियन्टालिया

वाराणसी दिल्ली

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

प्रकाशक :-
**चौखम्भा ओरियन्टालिया**
पो० आ० चौखम्भा, पो० बा० नं० १०३२
गोकुल भवन, के. ३७/१०६, गोपाल मन्दिर लेन
वाराणसी-२२१००१ (भारत)
टेलीफोन : ३३३४७६ टेलीग्राम : गोकुलोत्सव

---

*शाखा*—बंगलो रोड, ६ यू० बी० जवाहर नगर
दिल्ली—११०००७ फोन : २६११६१७

© चौखम्भा ओरियन्टालिया

तृतीय संस्करण : १६६४
मूल्य रू० : १०.००
मुद्रक—श्रीगोकुल मुद्रणालय, वाराणसी

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

॥ श्रीः ॥

# ललितासहस्रनामस्तोत्रम्

॥ श्रीगणेशाय नमः ॥

## उपोद्घाताख्या प्रथमा कला

त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।
त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ॥ १ ॥

ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥

पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम् ।
षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥
दशभूः सार्धनृपाला अङ्गुष्टं सार्धनवषडङ्गुष्टम् ।
मुनिसुतहयाम्बाश्वाम्बाश्वोक्तिर्ध्यानमेकेन ॥ ४ ॥

अगस्त्य उवाच

आश्वानन महाबुद्धे सर्वशास्त्रविशारद ।
कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥
पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥ २ ॥
वर्णितं श्रीपुरं चापि महाविभवविस्तरम् ।

श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ॥ ३ ॥
षोढा न्यासादयो न्यासा न्यासखण्डे समीरिताः ॥ ४ ॥
अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ।
मायायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ॥ ५ ॥
पुरश्चरणखण्डे तु जपलक्षणमीरितम् ।
होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ॥ ६ ॥
चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनो ।
रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ।
स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।

न तु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥ ८ ॥
तत्र मे संशयो जातो हयग्रीव दयानिधे ।
किंवा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥ ९ ॥
मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥ १० ॥

सूत उवाच

इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।
प्रहृष्टो वचनं प्राह तापसं कुम्भसम्भवम् ॥ ११ ॥
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।
नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥ १२ ॥

रहस्यमिति मत्वाहं नोक्तवांस्ते न चान्यथा ।
पुनश्च पृच्छसे भक्तया तस्मात्तत्ते वदाम्यहम् ॥ १३ ॥
ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः ।
भवता न प्रदेयं स्यादभक्ताय कदाचन ॥ १४ ॥
न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।
श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥ १५ ॥
उपासकाय शुद्धाय देयं नामसहस्रकम् ।
यानि नामसहस्राणि सद्यःसिद्धिप्रदानि वै ॥ १६ ॥
तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ॥ १७ ॥

पुराणां श्रीपुरमिव शक्तीनां ललिता यथा ।
श्रीविद्योपासकानां च यथा देवो वरः शिवः ॥ १८ ॥
तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम् ।
यथास्य पठनाद्देवी प्रीयते ललिताम्बिका ॥ १९ ॥
अन्यनामसहस्रस्य पाठान्न प्रीयते तथा ।
श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥ २० ॥
बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम् ।
पद्मैर्वा तुलसीपत्रैरेभिर्नामसहस्रकैः ॥ २१ ॥
सद्यः प्रसादं कुरुते तत्र सिंहासनेश्वरी ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ २२ ॥

ललितासहस्रनामस्तोत्रम् ९

जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् ।
जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ॥ २३ ॥
साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।
उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥ २४ ॥
इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।
चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥ २५ ॥
भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।
भक्तस्यावश्यकमिदं नामसाहस्रकीर्तनम् ॥ २६ ॥
तत्र हेतुं प्रवक्ष्यामि शृणु त्वं कुम्भसम्भव ।
पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥ २७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् ।
वाग्देवता वशिन्याद्याः शृणुध्वं वचनं मम ॥ २८ ॥
भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ।
मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥ २९ ॥
मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।
मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥ ३० ॥
कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।
येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत् ॥ ३१ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

हयग्रीव उवाच

इत्याज्ञप्ता वचो देव्यः श्रीदेव्या ललिताम्बया ।

रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् ॥ ३२ ॥
रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ।
ततः कदाचित्सदसि स्थित्वा सिंहासनेऽम्बिका ॥ ३३ ॥
स्वसेवावसरं प्रादात्सर्वेषां कुम्भसम्भव ।
सेवार्थमागतास्तत्र ब्रह्माणीब्रह्मकोटयः ॥ ३४ ॥
लक्ष्मीनारायणानां च कोटयः समुपागताः ।
गौरीकोटिसमेतानां रुद्राणामपि कोटयः ॥ ३५ ॥
मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याः समागताः ।
शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥ ३६ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।

तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥ ३७ ॥
तेषु दृष्टोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।
तत्र श्रीललितादेवी कटाक्षाक्षेपचोदिताः ॥ ३८ ॥
उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा ।
अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥ ३९ ॥
श्रुत्वा स्तवं प्रसन्नाऽभूल्ललिता परमेश्वरी ।
सर्वे ते विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥ ४० ॥
ततः प्रोवाच ललिता सदस्यान्देवतागणान् ।
ममाज्ञयैव वाग्देव्यश्चक्रुः स्तोत्रमनुत्तमम् ॥ ४१ ॥
अङ्कितं नामभिर्दिव्यैर्मम प्रीतिविधायकैः ॥ ४२ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ।
प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ॥ ४३ ॥
इदं नामसहस्रं मे यो भक्तः पठते सकृत् ।
स मे प्रियतमो ज्ञेयस्तस्मै कामान्ददाम्यहम् ॥ ४४ ॥
श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ।
पश्चान्नाम सहस्रं मे कीर्तयेन्मम पुष्टये ॥ ४५ ॥
ममार्चयतु वा मा वा विद्या जपतु वा न वा ।
कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥ ४६ ॥
मत्प्रीत्या सकलान्कामाँल्लभते नात्र संशयः ।
यस्मान्नामसहस्रं मे कीर्तयध्वं सदादरात् ॥ ४७ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

हयग्रीव उवाच

इति श्रीललितेशानी शास्ति देवान्सहानुगान् ॥ ४८ ॥
तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ।
शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥ ४९ ॥
पठन्ति भक्त्या सततं ललितापरितुष्टये ।
तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥ ५० ॥
आवश्यकत्वे हेतुस्ते मया प्रोक्तो मुनीश्वर ।
इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया शृणु ॥ ५१ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

इति ललितासहस्रनाम्न्युपोद्घातप्रकरणं समाप्तम् ।

## द्वितीया तापिनी कला

अस्य श्रीललितासहस्रनामस्तोत्रमहामन्त्रस्य वाशिन्यादयो वाग्देवता ऋषयः, अनुष्टुप् छन्दः, ललितापरमेश्वरी देवता, श्रीमद्वाग्भवकूटेति बीजम्, मध्यकूटेति शक्तिः, कीलकम्, मूलप्रकृतिरिति स्वरूपम्, श्रीललितात्रिपुरसुन्दरीप्रसाद-सिद्धिद्वारा चिन्तितफलावाप्त्यर्थं जपे विनियोगः ।

### अथ ध्यानम्

सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।

पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं
सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥१॥

श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी ।
चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता ॥ २ ॥
उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता ।
रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥ ३ ॥
मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ।
निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डला ॥ ४ ॥
चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥ ५ ॥

अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।
मुखचन्द्रकलङ्काभमृगनाभिविशेषका ॥ ६ ॥
वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका ।
वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥ ७ ॥
नवचम्पकपुष्पाभनासादण्डविराजिता ।
ताराकान्तितिरस्कारिनासाभरणभासुरा ॥ ८ ॥
कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।
ताटङ्कयुगलीभूततपनोडुपमण्डला ॥ ९ ॥
पद्मरागशिलादर्शपरिभाविकपोलभूः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥ १० ॥

शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला ।
कर्पूरवीटिकामोदसमाकर्षिदिगन्तरा ॥ ११ ॥
निजसंलापमाधुर्यविनिर्भर्त्सितकच्छपी ।
मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥ १२ ॥
अनाकलितसादृश्यचिबुकश्रीविराजिता ।
कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥ १३ ॥
कनकाङ्गदकेयूरकमनीयभुजान्विता ।
रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥ १४ ॥
कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
नाभ्यालवालरोमालिलताफलकुचद्वयी ॥ १५ ॥

लक्ष्यरोमलताधारतासमुन्नेयमध्यमा ।
स्तनभारदलन्मध्यपट्टबन्धवलित्रया ॥ १६ ॥
अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी ।
रत्नकिङ्किणिकारम्यरशनादामभूषिता ॥ १७ ॥
कामेशज्ञातसौभाग्यमार्दवोरुद्वयान्विता ।
माणिक्यमुकुटाकारजानुद्वयविराजिता ॥ १८ ॥
इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका ।
गूढंगुल्फा कूर्मपिष्ठजयिष्णुप्रपदान्विता ॥ १९ ॥
नखदीधितिसंछन्ननमज्जनतमोगुणा ।
पदद्वयप्रभाजालपराकृतसरोरुहा ॥ २० ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजा ।
मरालीमन्दगमना महालावण्यशेवधिः ॥ २१ ॥
सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता ।
शिवकामेश्वराङ्कस्था शिवा स्वाधीनवल्लभा ॥ २२ ॥
सुमेरुशृङ्गमध्यस्था श्रीमन्नगरनायिका ।
चिन्तामणिगृहान्तस्था पञ्चब्रह्मासनस्थिता ॥ २३ ॥
महापद्माटवीसंस्था कदम्बवनवासिनी ।
सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥ २४ ॥
देवर्षिगणसङ्घातस्तूयमानात्मवैभवा ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

भण्डासुरवधोद्युक्तशक्तिसेनासमन्विता ॥ २५ ॥

सम्पत्करी समारूढसिन्धुरव्रजसेविता ।
अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥ २६ ॥
चक्रराजरथारूढसर्वायुधपरिष्कृता ।
गेयचक्ररथारूढमन्त्रिणीपरिसेविता ॥ २७ ॥
किरिचक्ररथारूढदण्डनाथपुरस्कृता ।
ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥ २८ ॥
भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता ।
नित्यपराक्रमाटोपनिरीक्षणसमुत्सुका ॥ २९ ॥
भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
मन्त्रिण्यम्बाविरचितविषङ्गवधतोषिता ॥ ३० ॥

विशुक्रप्राणहरणवाराहीवीर्यनन्दिता ।
कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥ ३१ ॥
महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता ।
भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥ ३२ ॥
कराङ्गुलिनखोत्पन्ननारायणदशाकृति ।
महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ॥ ३३ ॥
कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका ।
ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा ॥ ३४ ॥
हरनेत्राग्निसन्दग्धकामसञ्जीवनौषधिः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥ ३५ ॥

कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी ।
शक्तिकूटैकतापन्नकट्यधोभागधारिणी ॥ ३६ ॥
मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा ।
कुलामृतैकरसिका कुलसङ्केतपालिनी ॥ ३७ ॥
कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी ।
अकुला समयान्तस्था समयाचारतत्परा ॥ ३८ ॥
मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी ।
मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ॥ ३९ ॥

इति ललितासहस्रनाम्नि प्रथमशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

# तृतीया भूमिका कला

आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी ।
सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥ १ ॥

तडिल्लतासमरुचिः षट्चक्रोपरिसंस्थिता ।
महाशक्तिः कुण्डलिनी बिसतन्तुतनीयसी ॥ २ ॥

भवानी भावनागम्या भवारण्यकुठारिका ।
भद्रप्रीता भद्रमूर्तिर्भक्तसौभाग्यदायिनी ॥ ३ ॥

भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।
शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥ ४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

शाङ्करी श्रीकरी साध्वी शरच्चन्द्रनिभानना ।
शान्तोदरी शान्तिमयी निराधारा निरञ्जना ॥ ५ ॥

निर्लेपा निर्मला नित्या निराकारा निराकुला ।
निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥ ६ ॥

नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।
नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥ ७ ॥

निष्कारणा निष्कलङ्का निरुपाधिर्निरीश्वरा ।
नीरागा रागमथनी निर्मदा मदनाशिनी ॥ ८ ॥

निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी ।
निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ॥ ९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।
निःसंशया संशयघ्नी निर्भवा भवनाशिनी ॥ १० ॥
निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।
निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा ॥ ११ ॥
निस्तुला नीलचिकुरा निरपाया निरत्यया ।
दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥ १२ ॥
दुष्टदूरा दुराचारशमनी दोषवर्जिता ।
सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ॥ १३ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

इति ललितासहस्रनाम्नि तृतीयशतकं समाप्तम् ।

## चतुर्थी मरीच्याख्या कला

सर्वशक्तिमयी सर्वमङ्गला सद्गतिप्रदा ।
सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ॥ १ ॥

सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मयी ।
माहेश्वरी महादेवी महालक्ष्मीर्मृडप्रिया ॥ २ ॥

महारूपा महापूज्या महापातकनाशिनी ।
महामाया महासत्त्वा महाशक्तिर्महारतिः ॥ ३ ॥

महाभोगा महैश्वर्या महावीर्या महाबला ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
महाबुद्धिर्महासिद्धिर्महायोगेश्वरेश्वरी ॥ ४ ॥

महातन्त्रा महामन्त्रा महायन्त्रा महासना ।
महायागक्रमाराध्या महाभैरवपूजिता ॥ ५ ॥
महेश्वरमहाकल्पमहाताण्डवसाक्षिणी ।
महाकामेशमहिषी महात्रिपुरसुन्दरी ॥ ६ ॥
चतुःषष्ठ्युपचाराढ्या चतुःषष्टिकलामयी ।
महाचतुःषष्टिकोटियोगिनीगणसेविता ॥ ७ ॥
मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा ।
चारुरूपा चारुहासा चारुचन्द्रकलाधरा ॥ ८ ॥
चराचरजगन्नाथा चक्रराजनिकेतना ।
पार्वती पद्मनयना पद्मरागसमप्रभा ॥ ९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।
चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥ १० ॥
ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता ।
विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ॥ ११ ॥
सुप्ता प्राज्ञात्मिका तुर्या सर्वावस्थाविवर्जिता ।
सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥ १२ ॥
संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।
सदाशिवाऽनुग्रहदा पञ्चकृत्यपरायणा ॥ १३ ॥
भानुमण्डलमध्यस्था भैरवी भगमालिनी ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पद्मासना भगवती पद्मनाभसहोदरी ॥ १४ ॥

उन्मेषनिमिषोत्पन्नविपन्नभुवनावली ।
सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥ १५ ॥
आब्रह्मकीटजननी वर्णाश्रमविधायिनी ।
निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ॥ १६ ॥
श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिका ।
सकलागमसन्दोहशुक्तिसम्पुटमौक्तिका ॥ १७ ॥
पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी ।
अम्बिकाऽनादिनिधना हरिब्रह्मसेविता ॥ १८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

इति ललितासहस्रनाम्नि चतुर्थशतकं समाप्तम् ।

# पञ्चमी ज्वालिनी कला

नारायणी नादरूपा नामरूपविवर्जिता ।
ह्रीङ्कारी ह्रीमती हृद्या हेयोपादेयवर्जिता ॥ १ ॥

राजराजार्चिता राज्ञी रम्या राजीवलोचना ।
रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला ॥ २ ॥

रमा राकेन्दुवदना रतिरूपारतिप्रिया ।
रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा ॥ ३ ॥

काम्या कामकलारूपा कदम्बकुसुमप्रिया ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
कल्याणी जगतीकन्दा करुणारससागरा ॥ ४ ॥

कलावती कलालापा कान्ता कादम्बरीप्रिया ।
वरदा वामनयना वारुणीमदविह्वला ॥ ५ ॥

विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी ।
विधात्री वेदजननी विष्णुमाया विलासिनी ॥ ६ ॥

क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्रक्षेत्रज्ञपालिनी ।
क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥ ७ ॥

विजया विमला वन्द्या वन्दारुजनवत्सला ।
वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

भक्तिमत्कल्पलतिका पशुपाशविमोचिनी ।
संहृताशेषपाखण्डा सदाचारप्रवर्तिका ॥ ९ ॥

तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका ।
तरुणी तापसाराध्या तनुमध्या तमोपहा ॥ १० ॥
चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी ।
स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥ ११ ॥
परा प्रत्यक्चितीरूपा पश्यन्ति परदेवता ।
मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥ १२ ॥
कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।
शृङ्गाररससम्पूर्णा जया जालन्धरस्थिता ॥ १३ ॥
ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥ १४ ॥

सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।
षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता ॥ १५ ॥
नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी ।
नित्याषोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥ १६ ॥
प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी ।
मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥ १७ ॥

इति ललितासहस्रनाम्नि चतुर्थशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## षष्ठी रुच्याख्या कला

व्यापिनी विविधाकारा विद्याविद्यास्वरूपिणी ।
महाकामेशनयनकुमुदाह्लादकौमुदी ॥ १ ॥

भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः ।
शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ॥ २ ॥

शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।
अप्रमेया स्वप्रकाशाऽमनोवाचामगोचरा ॥ ३ ॥

चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
गायत्री व्याहृतिः सन्ध्या द्विजवृन्दनिषेविता ॥ ४ ॥

तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता ।
निःसीममहिमा नित्ययौवना मदशालिनी ॥ ५ ॥

मदाघूर्णितरक्ताक्षी पदपाटलगण्डभूः ।
चन्दनद्रवदिग्धाङ्गा चाम्पेयकुसुमप्रिया ॥ ६ ॥

कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।
कुलकुण्डालया कौलमार्गतत्परसेविता ॥ ७ ॥

कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।
शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥८॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

तेजोवती त्रिनयना लोलाक्षी कामरूपिणी ।
मालिनी हंसिनी माता मलयाचलवासिनी ॥ ९ ॥

सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका ।
कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ १० ॥
वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता ।
सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥ ११ ॥
विशुद्धिचक्रनिलयाऽऽरक्तवर्णा त्रिलोचना ।
खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥ १२ ॥
पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।
अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥ १३ ॥
अनाहताब्जनिलया श्यामाभा वदनद्वया ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
दंष्ट्रोज्ज्वलाक्षमालादिधरा रुधिरसंस्थिता ॥ १४ ॥

कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया ।
महावीरेन्द्रवरदा राकिण्यम्बास्वरूपिणी ॥ १५ ॥

मणिपूराब्जनिलया वदनत्रयसंयुता ।
वज्रादिकायुधोपेता डामर्यादिभिरावृता ॥ १६ ॥

इति ललितासहस्रनाम्नि पञ्चमशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## सप्तमी सुषुम्णा कला

रक्तवर्णा मांसनिष्ठा गुडान्नप्रीतमानसा ।
समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ॥ १ ॥

स्वाधिष्ठानाम्बुजगता चतुर्वक्त्रमनोहरा ।
शूलाद्यायुधसम्पन्ना पीतवर्णाऽतिगर्विता ॥ २ ॥

मेदोनिष्ठा मधुप्रीता बन्धिन्यादिसमन्विता ।
दध्यन्नासक्तहृदया काकिनीरूपधारिणी ॥ ३ ॥

मूलाधाराम्बुजारूढापञ्चवक्त्राऽस्थिसंस्थिता ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

अङ्कुशादिप्रहरणा वरदादिनिषेविता ॥ ४ ॥

मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी ।
आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥ ५.॥
मज्जासंस्था हंसवती मुख्यशक्तिसमन्विता ।
हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥ ६ ॥
सहस्रदलपद्मस्था सर्ववर्णोपशोभिता ।
सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ॥ ७ ॥
सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी ।
स्वाहा स्वधा मतिर्मेधाश्रुतिस्मृतिरनुत्तमा ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना ।
पुलोमजार्चिता बन्धमोचनी बन्धुरालका ॥ ९ ॥

विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः ।
सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ॥ १० ॥
अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी ।
कात्यायनी कालहन्त्री कमलाक्षनिषेविता ॥ ११ ॥
ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा ।
मृगाक्षी मोहिनी मुख्या मृडानी मित्ररूपिणी ॥ १२ ॥
नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी ।
मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ॥ १३ ॥
पराशक्तिः परनिष्ठा प्रज्ञानघनरूपिणी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
माध्वीपानालसा मत्ता मातृकावर्णरूपिणी ॥ १४ ॥

महाकैलासनिलया मृणालमृदुदोर्लता ।
महनीया दयामूर्तिर्महासाम्राज्यशालिनी ॥ १५ ॥

आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।
श्रीषोडसाक्षरीविद्या त्रिकूठा कामकोटिका ॥ १६ ॥

कटाक्षकिंकरीभूतकमलाकोटिसेविता ।
शिरःस्थिता चन्द्रनिभा भालस्थेन्द्रधनुःप्रभा ॥ १७ ॥

हृदयस्था रविप्रख्या त्रिकोणान्तरदीपिका ।
दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥ १८ ॥

इति ललितासहस्रनाम्नि षष्ठशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

# अष्टमी भोगदा कला

दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी ।
गुरुमूर्तिर्गुणनिधिर्गोमाता गुहजन्मभूः ॥ १ ॥

देवेशी दण्डनीतिस्था दहराकाशरूपिणी ।
प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥ २ ॥

कलात्मिका कलानाथा काव्यालापविमोदिनी ।
सचामररमावाणीसव्यदक्षिणसेविता ॥ ३ ॥

आदिशक्तिरमेयात्मा परमा पावनाकृतिः ।
अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥ ४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

क्लीङ्कारी केवला गुह्या कैवल्यपददायिनी ।
त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥ ५ ॥
त्र्यक्षरी दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता ।
उमा शैलेन्द्रतनया गौरी गन्धर्वसेविता ॥ ६ ॥
विश्वगर्भा स्वर्णगर्भाऽवरदा वागधीश्वरी ।
ध्यानगम्याऽपरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥ ७ ॥
सर्ववेदान्तसंवेद्या सत्यानन्दस्वरूपिणी ।
लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ॥ ८ ॥
अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
योगिनी योगदा योग्या योगानन्दयुगन्धरा ॥ ९ ॥

इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी ।
सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥ १० ॥
अष्टमूर्तिरजा जैत्री लोकयात्राविधायिनी ।
एकाकिनी भूमरूपा निर्द्वैता द्वैतवर्जिता ॥ ११ ॥
अन्नदा वसुदा वृद्धा ब्रह्मात्मैक्यस्वरूपिणी ।
बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥ १२ ॥
भाषारूपा बृहत्सेना भावाभावविवर्जिता ।
सुखाराध्या शुभकरी शोभना सुलभागतिः ॥ १३ ॥
राजराजेश्वरी राज्यदायिनी राज्यवल्लभा ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥ १४ ॥

राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी ।
साम्राज्यदायिनी सत्यसन्धा सागरमेखला ॥ १५ ॥
दीक्षिता दैत्यशमनी सर्वलोकवशङ्करी ।
सर्वार्थदात्री सावित्री सच्चिदानन्दरूपिणी ॥ १६ ॥

इति ललितासहस्रनाम्नि सप्तमशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## नवमी विश्वा कला

देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी ।
सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥ १ ॥

सर्वोपाधिविनिर्मुक्ता सदाशिवपतिव्रता ।
सम्प्रदायेश्वरी साध्वी गुरुमण्डलरूपिणी ॥ २ ॥

कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।
गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥ ३ ॥

स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥ ४ ॥

चित्कालानन्दकलिका प्रेमरूपा प्रियङ्करी ।
नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥ ५ ॥
मिथ्याजगदधिष्ठाना मुक्तिदा मुक्तिरूपिणी ।
लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ॥ ६ ॥
भवदावसुधावृष्टिः पापारण्यदवानला ।
दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥ ७ ॥
भाग्याब्धिचन्द्रिका भक्तचित्तकेकिघनाघना ।
रोगपर्वतदम्भोलिर्मृत्युदारुकुठारिका ॥ ८ ॥
CC-0. Prof Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
महेश्वरी महाकाली महाग्रासा महाशना ।
अपर्णा चण्डिका चण्डमुण्डासुरनिषूदनी ॥ ९ ॥

क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।

त्रिवर्गदात्री सुभगा त्र्यम्बका त्रिगुणात्मिका ॥ १० ॥

स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।

ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥ ११ ॥

दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया ।

महती मेरुनिलया मन्दारकुसुमप्रिया ॥ १२ ॥

वीराराध्या विराड्रूपा विरजा विश्वतोमुखी ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी ॥ १३ ॥

मार्तण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः ।
त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥ १४ ॥
सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।
कपर्दिनी कलामाला कामधुक्कामरूपिणी ॥ १५ ॥

इति ललितासहस्रनाम्नि अष्टमशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## दशमी बोधिनी कला

कलानिधिः काव्यकला रसज्ञा रसशेवधिः ।
पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ १ ॥
परंज्योतिः परंधाम परमाणुः परात्परा ।
पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ॥ २ ॥
मूर्तामूर्ता नित्यतृप्ता मुनिमानसहंसिका ।
सत्यव्रता सत्यरूपा सर्वान्तर्यामिणी सती ॥ ३ ॥
ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

प्रसवित्री प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ ४ ॥

प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी ।
विश्रृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥ ५ ॥
मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी ।
भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥ ६ ॥
छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी ।
उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥ ७ ॥
जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी ।
सर्वोपनिषदुद्घुष्टा शान्त्यतीता कलात्मिका ॥ ८ ॥
गम्भीरा गगनान्तःस्था गर्विता गानलोलुपा ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
कल्पनारहिता काष्ठाऽकान्ताकान्तार्धविग्रहा ॥ ९ ॥

कार्यकारणनिर्मुक्ता कामकेलितरङ्गिता ।
कनत्कनकताटङ्का लीलाविग्रहधारिणी ॥ १० ॥

अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी ।
अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ॥ ११ ॥

त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी ।
निरामया निरालम्बा स्वात्मारामा सुधास्रुतिः ॥ १२ ॥

संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता ।
यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ॥ १३ ॥

धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ॥ १४ ॥

विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।
अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ॥ १५ ॥

इति ललितासहस्रनाम्नि नवमशतकं समाप्तम् ।

## एकादशी धारिणी कला

वीरगोष्ठीप्रिया वीरा नैष्कर्म्या नादरूपिणी ।
विज्ञानकलना कल्या विदग्धा विन्ध्यवासिनी ॥ १ ॥
तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी ।
सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ॥ २ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

सव्यापसव्यमार्गस्था सर्वापद्विनिवारिणी ।
स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥ ३ ॥

चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया ।
सदोदिता सदातुष्टा तरुणादित्यपाटला ॥ ४ ॥
दक्षिणादक्षिणाराध्या दरस्मेरमुखाम्बुजा ।
कौलिनीकेवलाऽनर्घ्यकैवल्यफलदायिनी ॥ ५ ॥

स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा ।
मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥ ६ ॥
विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।
प्रगल्भा परमोदारा परमोदा मनोमयी ॥ ७ ॥
व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ॥ ८ ॥

पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी ।
शाश्वती शाश्वतैश्वर्या शर्मदा शम्भुमोहिनी ॥ ९ ॥
धरा धरसुता धन्या धर्मिणी धर्मवर्धिनी ।
लोकातीता गुणातीता सर्वातीता शमात्मिका ॥ १० ॥
बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी ।
सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥ ११ ॥
सुवासिन्यर्चनप्रीताऽऽशोभना शुद्धमानसा ।
बिन्दुतर्पणसंतुष्टा पूर्वजा त्रिपुराम्बिका ॥ १२ ॥
दशमुद्रासमाराध्या त्रिपुराश्रीवशङ्करी ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ज्ञानमुद्रा ज्ञानगम्या ज्ञानज्ञेयस्वरूपिणी ॥ १३ ॥

योनिमुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा ।
अनघाऽद्भुतचारित्रा वाञ्छितार्थप्रदायिनी ॥ १४ ॥
अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी ।
अव्याजकरुणामूर्तिरज्ञानध्वान्तदीपिका ॥ १५ ॥
आबालगोपविदिता सर्वानुल्लङ्घ्यशासना ।
श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ॥ १६ ॥
श्रीशिवाशिवशक्त्यैक्यरूपिणी ललिताम्बिका ।
श्रीमणिसध्रींविविधगुडदरान्देशैश्च पुष्टनादाभ्याम्।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

नामसु शतकारम्भा न स्तोभा नापि शब्दपुनरुक्तिः॥ १७॥

मतिवरदाकान्तादावकारयोगेन रक्तवर्णादौ ।
आकारस्य क्वचन तु पदयोर्योगेन भेदयेन्नाम ॥ १८ ॥
साक्षी तत्त्वमयीति द्वेधा त्रेधा बुधो भिद्यात् ।
हंसवती चानर्घ्येत्यर्धान्तादेकनामैव ॥ १९ ॥
शक्तिर्निष्ठाधामज्योतिःपरपूर्वकं द्विपदम् ।
शोभनसुलभा सुगतिस्त्रिपदैकपदानि शेषाणि ॥ २० ॥
निधिरात्मा दम्भोलिः शेवधिरिति नाम पुंलिङ्गम् ।
तद्ब्रह्मधाम साधुज्योतिः क्लीबेऽव्ययं स्वधा स्वाहा ॥ २१ ॥

इति ललितासहस्रनाम्नि दशमशतकं समाप्तम् ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## क्षमाख्या द्वादशी कला

आविंशतितः सार्धान्नानाफलसाधनत्वोक्तिः ।
तस्य क्रमशो विवृतिः षट्चत्वारिंशता श्लोकैः ॥ १ ॥

इत्येवं नामसाहस्रं कथितं ते घटोद्भव ॥ २ ॥

रहस्यानां रहस्यं च ललिताप्रीतिदायकम् ।
अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ॥ ३ ॥

सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
सर्वापमृत्युशमनं कालमृत्युनिवारणम् ॥ ४ ॥

सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम् ।
पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ॥ ५ ॥

इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायकम् ।
जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ॥ ६ ॥

प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ।
पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ॥ ७ ॥

विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा ।
रहस्यनामसाहस्रमिदं पश्चात् पठेन्नरः ॥ ८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

जन्ममध्ये सकृच्चापि य एवं पठते सुधीः ।
तस्य पुण्यफलं वक्ष्ये शृणु त्वं कुम्भसम्भव ॥ ९ ॥

गङ्गादिसर्वतीर्थेषु यः स्नायात्कोटिजन्मसु ।
कोटिलिङ्गप्रतिष्ठां तु या कुर्यादविमुक्तके ॥ १० ॥

कुरुक्षेत्रे तु यो दद्यात्कोटिवारं रविग्रहे ।
कोटिं सौवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ॥ ११ ॥

यः कोटिं हयमेधानामाहरेद्गाङ्गरोधसि ।
आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ॥ १२ ॥

दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम् ।
श्रद्धया परया कुर्यात्सहस्रपरिवत्सरान् ॥ १३ ॥

तत्पुण्यं कोटिगुणितं लभेत्पुण्यमनुत्तमम् ।
CC-0. Prof. Satya Vrat Shastri Collection. New Delhi. Digitized by S3 Foundation USA
रहस्यनामसहस्रे नाम्नोऽप्येकस्य कीर्तनात् ॥ १४ ॥

रहस्यनामसाहस्रे नामैकमपि यः पठेत् ।
तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ॥ १५ ॥
नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ।
यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ॥ १६ ॥
बहुनात्र किमुक्तेन शृणु त्वं कलशीसुत ।
अत्रैकनाम्नो या शक्तिः पातकानां निवर्तते ।
तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ॥ १७ ॥
यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति ।
स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ॥ १८ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

भक्तो यः कीर्तयन्नित्यमिदं नामसहस्रकम् ।

ललितासहस्रनामस्तोत्रम्  ६३

तस्मै श्रीललितादेवी प्रीताऽभीष्टं प्रयच्छति ॥ १९ ॥
अकीर्तयन्निदं स्तोत्रं कथं भक्तो भविष्यति ॥ २० ॥
नित्यं सङ्कीर्तनाशक्तः कीर्तयेत्पुण्यवासरे ।
संक्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ॥ २१ ॥
नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे ।
कीर्तयेन्नामसाहस्रं पौर्णमास्या विशेषतः ॥ २२ ॥
पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम् ।
पञ्चोपचारैः सम्पूज्य पठेन्नामसहस्रकम् ॥ २३ ॥
सर्वे रोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
अयमायुष्करो नाम प्रयोगः कल्पनोदितः ॥ २४ ॥

ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ।
तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ॥ २५ ॥

सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् ।
तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ॥ २६ ॥

जलं संमन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ।
अभिषिञ्चेद्ग्रहग्रस्तान्ग्रहा नश्यन्ति तत्क्षणात् ॥ २७ ॥

सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ।
यः पठेन्नामसाहस्रं विषं तस्य विनश्यति ॥ २८ ॥

वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद्ध्रुवम् ॥ २९ ॥

देव्याः पाशेन सम्बद्धामाकृष्टामङ्कुशेन च ।
ध्यात्वाऽभीष्टां स्त्रियं रात्रौ पठेन्नामसहस्रकम् ॥ ३० ॥
आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता ।
राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ॥ ३१ ॥
त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ।
स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ॥ ३२ ॥
आरुह्य याति निकटं दासवत्प्रणिपत्य च ।
तस्मै राज्यं च कोशं च दद्यादेव वशंगतः ॥ ३३ ॥
रहस्यनामसाहस्रं यः कीर्तयति नित्यशः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ॥ ३४ ॥

यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ।
तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ॥ ३५ ॥

यो वाभिचारं कुरुते नामसाहस्रपाठके ।
निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिराः स्वयम् ॥ ३६ ॥

ये क्रूरदृष्ट्या वीक्षन्ते नामसाहस्रपाठकम् ।
तानन्धान्कुरुते क्षिप्रं स्वयं मार्तण्डभैरवः ॥ ३७ ॥

धनं यो हरते चोरैर्नामसाहस्रजापिनः ।
यत्र कुत्र स्थितं वापि क्षेत्रपालो निहन्ति तम् ॥ ३८ ॥

विद्यासु कुरुते वादं यो विद्वान्नामजापिनः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

तस्य वाक्स्तम्भनं सद्यः करोति नकुलीश्वरी ॥ ३९ ॥

यो राजा कुरुते वैरं नामसाहस्रजापिनः ।
चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम् ॥ ४० ॥

यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ।
लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ॥ ४१ ॥

मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ।
भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः ॥ ४२ ॥

यस्त्वेकवारं पठति पक्षमेकमतन्द्रितः ।
मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात् ॥ ४३ ॥

यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ ४४ ॥

यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने ।
अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ॥ ४५ ॥
श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति ।
यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ॥ ४६ ॥
तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता ।
यः कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ॥ ४७ ॥
पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ।
परीक्ष्य विद्याविदुषस्तेभ्यो दद्या द्विचक्षणः ॥ ४८ ॥
श्रीमन्त्रराजसदृशो यथा मन्त्रो न विद्यते ।
देवता ललितातुल्या यथा नास्ति घटोद्भव ॥ ४९ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः ।
लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम् ॥ ५० ॥
समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी ।
बहुनात्र किमुक्तेन शृणु त्वं कुम्भसम्भव ॥ ५१ ॥
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते ।
तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ॥ ५२ ॥
एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत्सकृत् ।
पद्मैर्वा तुलसीपुष्पैः कह्लारैर्वा कदम्बकैः ॥ ५३ ॥
चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ॥ ५४ ॥

अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः ।
तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ॥ ५५ ॥
सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम् ।
अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ॥ ५६ ॥
प्रतिमासं पौर्णमास्यामेभिर्नाम सहस्रकैः ।
रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम् ॥ ५७ ॥
स एव ललितारूपस्तद्रूपा ललिता स्वयम् ।
न तयोर्विद्यते भेदो भेदकृत्पापकृद्भवेत् ॥ ५८ ॥
महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम् ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ॥ ५९ ॥

यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् ।
चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ॥ ६० ॥
सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः ।
पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितान् ॥ ६१ ॥
अन्ते श्रीलीलादेव्याः सायुज्यमतिदुर्लभम् ।
प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ॥ ६२ ॥
यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः ।
समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ॥ ६३ ॥
तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ॥ ६४ ॥

निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ।
ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ॥ ६५ ॥
धनार्थी धनमाप्नोति यशोर्थी प्राप्नुयाद्यशः ।
विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ॥ ६६ ॥

नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने ।
कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ॥ ६७ ॥
चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा ।
स्वधर्मसमनुष्ठानकैवल्यपरिपूर्तये ॥ ६८ ॥
कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥ ६९ ॥

लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ।
विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ॥ ७० ॥
शिवनामसहस्राच्च देव्या नामैकमुत्तमम् ।
देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥ ७१ ॥
तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ।
रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ॥ ७२ ॥
तस्मात्सङ्कीर्तयेन्नित्यं कलिदोषनिवृत्तये ।
मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ॥ ७३ ॥
विष्णुनामपराः केचिच्छिवनामपराः परे ।
न कश्चिदपि लोकेषु ललितानामतत्परः ॥ ७४ ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

येनान्यदेवतानाम कीर्तितं जन्मकोटिषु ।
तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ।। ७५ ।।

चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ।
नामसाहस्रपाठश्च तथा चरमजन्मनि ।। ७६ ।।

यथैव विरला लोके श्रीविद्याचारवेदिनः ।
तथैव विरलो गुह्यनामसाहस्रपाठकः ।। ७७ ।।

मन्त्रराजजपश्चैव चक्रराजार्चनं तथा ।
रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ।। ७८ ।।

अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् ।
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
स चक्षुषा विना रूपं पश्येदेव विमूढधीः ।। ७९ ।।

रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः ।
स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥ ८० ॥
यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ।
नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥ ८१ ॥
तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ।
इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ॥ ८२ ॥
नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।
यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥ ८३ ॥
पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ।
यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥ ८४ ॥
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
तस्मै कुप्यन्ति योगिन्यः सोऽनर्थः सुमहान्स्मृतः ।

रहस्यनामसाहस्रं तस्मात्सङ्गोपयेदिदम् ॥ ८५ ॥
स्वतन्त्रेण मया नोक्तं तत्रापि कलशीभव ।
ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥ ८६ ॥
कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ।
तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ॥ ८७ ॥

सूत उवाच

इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।
आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥ ८८ ॥

इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
ललितासहस्रनामस्तोत्रं सम्पूर्णम् ।

॥ श्रीः ॥

# ललितासहस्रनामावली

ॐ श्रीमात्रे नमः ।

ॐ श्रीमहाराज्ञ्यै नमः ।

ॐ श्रीमत्सिंहासनेश्वर्यै नमः ।

ॐ चिदग्निकुण्डसम्भूतायै नमः ।

ॐ देवकार्यसमुद्यतायै नमः ।

ॐ उद्यद्भानुसहस्राभायै नमः ।

ॐ चतुर्बाहुसमन्वितायै नमः ।

ॐ रागस्वरूपपाशाढ्यायै नमः ।

ॐ क्रोधाकाराङ्कुशोज्ज्वलायै नमः ।

ॐ मनोरूपेक्षुकोदण्डायै नमः ॥१०॥

ॐ पञ्चतन्मात्रसायकायै नमः ।

ॐ निजारुणप्रभापूरमज्जद्ब्रह्माण्ड-
मण्डलायै नमः ।

ॐ चम्पकाशोकपुन्नागसौगन्धिक-
लसत्कचायै नमः ।

ॐ कुरुविन्दमणिश्रेणीकनत्कोटीर-
मण्डितायै नमः ।

ॐ अष्टमीचन्द्रविभ्राजदलिकस्थल-
शोभितायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ मुखचन्द्रकलङ्काभमृगनाभिविशेषकायै नमः ।

ॐ वदनस्मरमाङ्गल्यगृहतोरणचिल्लिकायै नमः ।

ॐ वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचनायै नमः ।

ॐ नवचम्पकपुष्पाभनासादण्डविराजितायै नमः ।

ॐ तराकान्तितिरस्कारिनासाभरणभासुरायै नमः ॥२०॥

ॐ कदम्बकञ्जरीक्लृप्तकर्णपूरमनोहरायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ ताटङ्कयुगलीभूततपनोडुपमण्डलायै नमः ।

ॐ पद्मरागशिलादर्शपरिभाविकपोलभुवे नमः ।

ॐ नवविद्रुमबिम्बश्रीन्यक्कारिदशनच्छदायै नमः ।

ॐ शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वलायै नमः ।

ॐ कर्पूरवीटिकामोदसमाकर्षद्दिगन्तरायै नमः ।

ॐ निजसंल्लापमाधुर्यविनिर्भर्सितकच्छप्यै नमः ।

ॐ मन्दस्मितप्रभापूरमज्जत्कामेशमानसायै नमः ।

ॐ अनाकलितसादृश्यचिबुक-
श्रीविराजितायै नमः।

ॐ कामेशबद्धमाङ्गल्यसूत्रशोभित-
कन्धरायै नमः। ॥३०॥

ॐ कनकाङ्गदकेयूरकमनीय-
भुजान्वितायै नमः।

ॐ रत्नग्रैवेयचिन्ताकलोलमुक्ता-
फलान्वितायै नमः।

ॐ कामेश्वरप्रेमरत्नमणिप्रति-
पणस्तन्यै नमः।

ॐ नाभ्यालवालरोमालिलताफल-
कुचद्वय्यै नमः।

ॐ लक्ष्यरोमलताधारतासमुन्नेय-
मध्यमायै नमः।

ॐ स्तनभारदलन्मध्यपट्टबन्ध-
वलित्रयायै नमः।

ॐ अरुणारुणकौसुम्भवस्त्र-
भास्वत्कटीतट्यै नमः।

ॐ रत्नकिङ्किणिकारम्यरशनादाम-
भूषितायै नमः।

ॐ कामेशज्ञातसौभाग्यमार्दवोरुद्व-
यान्वितायै नमः।

ॐ माणिक्यमुकुटाकारजानुद्वय-
विराजितायै नमः। ॥४०॥

ॐ इन्द्रगोपपरिक्षिप्तस्मरतूणा-
भजङ्घिकायै नमः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by Siddhanta eGangotri USA

ॐ गूढगुल्फायै नमः ।
ॐ कूर्मपृष्ठजयिष्णुप्रपदान्वितायै नमः ।
ॐ नखदीधितिसञ्छन्ननमज्जन-तमोगुणायै नमः ।
ॐ पदद्वयप्रभाजालपराकृतसरो-रुहायै नमः ।
ॐ शिञ्जानमणिमञ्जीरमण्डित-श्रीपदाम्बुजाय नमः ।
ॐ मरालीमन्दगमनायै नमः ।
ॐ महालावण्यशेवधये नमः ।
ॐ सर्वारुणायै नमः ।
ॐ अनवद्याङ्ग्यै नमः । ॥५०॥

ॐ सर्वाभरणभूषितायै नमः ।
ॐ शिवकामेश्वराङ्कस्थायै नमः ।
ॐ शिवायै नमः ।
ॐ स्वाधीनवल्लभायै नमः ।
ॐ सुमेरुशृङ्गमध्यस्थायै नमः ।
ॐ श्रीमन्नगरनायिकायै नमः ।
ॐ चिन्तामणिगृहान्तःस्थायै नमः ।
ॐ पञ्चब्रह्मासनस्थितायै नमः ।
ॐ महापद्माटवीसंस्थायै नमः ।
ॐ कदम्बवनवासिन्यै नमः ॥६०॥
ॐ सुधासागरमध्यस्थायै नमः ।
ॐ कामाक्ष्यै नमः ।
ॐ कामदायिन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ देवर्षिगणसङ्घातस्तूयमानात्म-
वैभवायै नमः ।
ॐ भण्डासुरवधोद्युक्तशक्तिसेना-
समन्वितायै नमः ।
ॐ सम्पत्करीसमारूढसिन्धुरव्रज-
सेवितायै नमः ।
ॐ अश्वारूढाधिष्ठिताश्वकोटिभि-
रावृतायै नमः ।
ॐ चक्रराजरथारूढसर्वायुध-
परिष्कृतायै नमः ।
ॐ गेयचक्ररथारूढमन्त्रिणी-
परिसेवितायै नमः ।
ॐ किरिचक्ररथारूढदण्डनाथ-
पुरस्कृतायै नमः । ॥७०॥
ॐ ज्वालामालिनिकाक्षिप्तवह्नि-
प्राकारमध्यगायै नमः ।
ॐ भण्डसैन्यवधोद्युक्तशक्ति-
विक्रमहर्षितायै नमः ।
ॐ नित्यापराक्रमाटोपनिरीक्षण-
समुत्सुकायै नमः ।
ॐ भण्डपुत्रवधोद्युक्तबालाविक्रम-
नन्दितायै नमः ।
ॐ मन्त्रिण्यम्बाविरचितविशुक्र-
वधतोषितायै नमः ।
ॐ विषङ्गप्राणहरणवाराहीवीर्य-
नन्दितायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ कामेश्वरमुखालोककल्पित-
श्रीगणेश्वरायै नमः ।
ॐ श्रीमहागणेशनिर्भिन्नयन्त्र-
प्रहर्षितायै नमः ।
ॐ भण्डासुरेन्द्रनिर्मुक्तशस्त्र-
प्रत्यस्त्रवर्षिण्यै नमः ।
ॐ कराङ्गुलिनखोत्पन्ननारायण-
दशाकृत्यै नमः ॥८०॥
ॐ महापाशुपतास्त्राग्निनिर्दग्धासुर-
सैनिकायै नमः ।
ॐ कामेश्वरास्त्रनिर्दग्धसभण्डासुर-
शून्यकायै नमः ।
ॐ ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुत-
वैभवायै नमः ।
ॐ हरनेत्राग्निसन्दग्धकाम-
सञ्जीवनौषध्यै नमः ।
ॐ श्रीमद्वाग्भवकूटैकस्वरूपमुख-
पङ्कजायै नमः ।
ॐ कण्ठाधःकटिपर्यन्तमध्य-
कूटस्वरूपिण्यै नमः ।
ॐ शक्तिकूटैकतापन्नकट्यधोभाग-
धारिण्यै नमः ।
ॐ मूलमन्त्रात्मिकायै नमः ।
ॐ मूलकूटत्रयकलेवरायै नमः ।
ॐ कुलामृतैकरसिकायै नमः ॥९०॥
ॐ कुलसंकेतपालिन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ कुलाङ्गनायै नमः ।
ॐ कुलान्तःस्थायै नमः ।
ॐ कौलिन्यै नमः ।
ॐ कुलयोगिन्यै नमः ।
ॐ अकुलायै नमः ।
ॐ समयान्तस्थायै नमः ।
ॐ समयाचारतत्परायै नमः ।
ॐ मूलाधारैकनिलयायै नमः ।
ॐ ब्रह्मग्रन्थिविभेदिन्यै नमः ।।१००।।
ॐ मणिपूरान्तरुदितायै नमः ।
ॐ विष्णुग्रन्थिविभेदिन्यै नमः ।
ॐ आज्ञाचक्रान्तरालस्थायै नमः ।
ॐ रुद्रग्रन्थिविभेदिन्यै नमः ।

ॐ सहस्राराम्बुजारूढायै नमः ।
ॐ सुधासाराभिवर्षिण्यै नमः ।
ॐ तडिल्लतासमरुच्यै नमः ।
ॐ षट्चक्रोपरिसंस्थितायै नमः ।
ॐ महाशक्त्यै नमः ।
ॐ कुण्डलिन्यै नमः ।। ११० ।।
ॐ विसतन्तुतनीयस्यै नमः ।
ॐ भवान्यै नमः ।
ॐ भावनागम्यायै नमः ।
ॐ भवारण्यकुठारिकायै नमः ।
ॐ भद्रप्रियायै नमः ।
ॐ भद्रमूर्तये नमः ।
ॐ भक्तसौभाग्यदायिन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ भक्तिप्रियायै नमः ।
ॐ भक्तिगम्यायै नमः ।
ॐ भक्तिवश्यायै नमः ॥ १२० ॥
ॐ भयापहायै नमः ।
ॐ शाम्भव्यै नमः ।
ॐ शारदाराध्यायै नमः ।
ॐ शर्वाण्यै नमः ।
ॐ शर्मदायिन्यै नमः ।
ॐ शाङ्कर्यै नमः ।
ॐ श्रीकर्यै नमः ।
ॐ साध्व्यै नमः ।
ॐ शरच्चन्द्रनिभाननायै नमः ।
ॐ शातोदर्यै नमः ॥ १३० ॥

ॐ शान्तिमत्यै नमः ।
ॐ निराधारायै नमः ।
ॐ निरञ्जनायै नमः ।
ॐ निर्लेपायै नमः ।
ॐ निर्मलायै नमः ।
ॐ नित्यायै नमः ।
ॐ निराकारायै नमः ।
ॐ निराकुलायै नमः ।
ॐ निर्गुणायै नमः ।
ॐ निष्कलायै नमः ॥ १४० ॥
ॐ शान्तायै नमः ।
ॐ निष्कामायै नमः ।
ॐ निरुपप्लवायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ नित्यमुक्तायै नमः ।
ॐ निर्विकारायै नमः ।
ॐ निष्प्रपञ्चायै नमः ।
ॐ निराश्रयायै नमः ।
ॐ नित्यशुद्धायै नमः ।
ॐ नित्यबुद्धायै नमः ।
ॐ निरवद्यायै नमः ॥ १५७ ॥
ॐ निरन्तरायै नमः ।
ॐ निष्कारणायै नमः ।
ॐ निष्कलङ्कायै नमः ।
ॐ निरुपाधये नमः ।
ॐ निरीश्वरायै नमः ।
ॐ नीरागायै नमः ।

ॐ रागमथन्यै नमः ।
ॐ निर्मदायै नमः ।
ॐ मदनाशिन्यै नमः ।
ॐ निश्चिन्तायै नमः ॥ १६८ ॥
ॐ निरहङ्कारायै नमः ।
ॐ निर्मोहायै नमः ।
ॐ मोहनाशिन्यै नमः ।
ॐ निर्ममायै नमः ।
ॐ ममताहन्त्र्यै नमः ।
ॐ निष्पापायै नमः ।
ॐ पापनाशिन्यै नमः ।
ॐ निष्क्रोधायै नमः ।
ॐ क्रोधशमन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ निर्लोभायै नमः ॥ १७० ॥
ॐ लोभनाशिन्यै नमः ।
ॐ निःसंशयायै नमः ।
ॐ संशयघ्न्यै नमः ।
ॐ निर्भवायै नमः ।
ॐ भवनाशिन्यै नमः ।
ॐ निर्विकल्पायै नमः ।
ॐ निराबाधायै नमः ।
ॐ निर्भेदायै नमः ।
ॐ भेदनाशिन्यै नमः ।
ॐ निर्नाशायै नमः ॥ १८० ॥
ॐ मृत्युमथन्यै नमः ।
ॐ निष्क्रियायै नमः ।

ॐ निष्परिग्रहायै नमः ।
ॐ निस्तुलायै नमः ।
ॐ नीलचिकुरायै नमः ।
ॐ निरपायायै नमः ।
ॐ निरत्ययायै नमः ।
ॐ दुर्लभायै नमः ।
ॐ दुर्गमायै नमः ।
ॐ दुर्गायै नमः ॥ १९० ॥
ॐ दुःखहन्त्र्यै नमः ।
ॐ सुखप्रदायै नमः ।
ॐ दुष्टदूरायै नमः ।
ॐ दुराचारशमन्यै नमः ।
ॐ दोषवर्जितायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ सर्वज्ञायै नमः।
ॐ सान्द्रकरुणायै नमः।
ॐ समानाधिकवर्जितायै नमः।
ॐ सर्वशक्तिमय्यै नमः।
ॐ सर्वमङ्गलायै नमः ॥२००॥
ॐ सद्गतिप्रदायै नमः।
ॐ सर्वेश्वर्यै नमः।
ॐ सर्वमय्यै नमः।
ॐ सर्वमन्त्रस्वरूपिण्यै नमः।
ॐ सर्वयन्त्रात्मिकायै नमः।
ॐ सर्वतन्त्ररूपायै नमः।
ॐ मनोन्मन्यै नमः।
ॐ माहेश्वर्यै नमः।
ॐ महादेव्यै नमः।
ॐ महालक्ष्म्यै नमः ॥२१०॥
ॐ मृडप्रियायै नमः।
ॐ महारूपायै नमः।
ॐ महापूज्यायै नमः।
ॐ महापातकनाशिन्यै नमः।
ॐ महामायायै नमः।
ॐ महासत्त्वायै नमः।
ॐ महाशक्त्यै नमः।
ॐ महारत्यै नमः।
ॐ महाभोगायै नमः।
ॐ महैश्वर्यायै नमः।
ॐ महावीर्यायै नमः।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ महाबलायै नमः ।
ॐ महाबुद्ध्यै नमः ।
ॐ महासिद्ध्यै नमः ।
ॐ महायोगीश्वरेश्वर्यै नमः ।
ॐ महातन्त्रायै नमः ।
ॐ महामन्त्रायै नमः ।
ॐ महासनायै नमः ।
ॐ महायागक्रमाराध्यायै नमः २३०
ॐ महाभैरवपूजितायै नमः ।
ॐ महेश्वरमहाकल्पमहाताण्डव-
साक्षिण्यै नमः ।
ॐ महाकामेशमहिष्यै नमः ।
ॐ महात्रिपुरसुन्दर्यै नमः ।
ॐ चतुःषष्ट्युपचाराढ्यायै नमः ।
ॐ चतुःषष्टिकलामय्यै नमः ।
ॐ महाचतुःषष्टिकोटियोगिनी-
गणसेवितायै नमः ।
ॐ मनुविद्यायै नमः ।
ॐ चन्द्रविद्यायै नमः ।
ॐ चन्द्रमण्डलमध्यगायै नमः ॥२४०॥
ॐ चारुरूपायै नमः ।
ॐ चारुहासायै नमः ।
ॐ चारुचन्द्रकलाधरायै नमः ।
ॐ चराचरजगन्नाथायै नमः ।
ॐ चक्रराजनिकेतनायै नमः ।
ॐ पार्वत्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ पद्मनयनायै नमः ।
ॐ पद्मरागसमप्रभायै नमः ।
ॐ पञ्चप्रेतासनासीनायै नमः ।
ॐ पञ्चब्रह्मस्वरूपिण्यै नमः ।।२५०।।
ॐ चिन्मय्यै नमः ।
ॐ परमानन्दायै नमः ।
ॐ विज्ञानघनरूपिण्यै नमः ।
ॐ ध्यानध्यातृध्येयरूपायै नमः ।
ॐ धर्माधर्मविवर्जितायै नमः ।
ॐ विश्वरूपायै नमः ।
ॐ जागरिण्यै नमः ।
ॐ स्वपन्त्यै नमः ।
ॐ तैजसात्मिकायै नमः ।

ॐ सुप्तायै नमः ।। २६० ।।
ॐ प्राज्ञात्मिकायै नमः ।
ॐ तुर्यायै नमः ।
ॐ सर्वावस्थाविवर्जितायै नमः ।
ॐ सृष्टिकर्त्र्यै नमः ।
ॐ ब्रह्मरूपायै नमः ।
ॐ गोप्त्र्यै नमः ।
ॐ गोविन्दरूपिण्यै नमः ।
ॐ संहारिण्यै नमः ।
ॐ रुद्ररूपायै नमः ।
ॐ तिरोधानकर्त्र्यै नमः ।। २७० ।।
ॐ ईश्वर्यै नमः ।
ॐ सदाशिवायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ अनुग्रहदायै नमः ।
ॐ पञ्चकृत्यपरायणायै नमः ।
ॐ भानुमण्डलमध्यस्थायै नमः ।
ॐ भैरव्यै नमः ।
ॐ भगमालिन्यै नमः ।
ॐ पद्मासनायै नमः ।
ॐ भगवत्यै नमः ।
ॐ पद्मनाभसहोदर्यै नमः ॥२८०॥
ॐ उन्मेषनिमिषोत्पन्नविपन्न-
भुवनावल्यै नमः ।
ॐ सहस्रशीर्षवदनायै नमः ।
ॐ सहस्राक्ष्यै नमः ।
ॐ [illegible] नमः ।

ॐ आब्रह्मकीटजनन्यै नमः ।
ॐ वर्णाश्रमविधायिन्यै नमः ।
ॐ निजाज्ञारूपनिगमायै नमः ।
ॐ पुण्यापुण्यफलप्रदायै नमः ।
ॐ श्रुतिसीमन्तदूरीकृतपादाब्ज-
धूलिकायै नमः ।
ॐ सकलागमसन्दोहशुक्तिसम्पुट-
मौक्तिकायै नमः ॥२९०॥
ॐ पुरुषार्थप्रदायै नमः ।
ॐ पूर्णायै नमः ।
ॐ भोगिन्यै नमः ।
ॐ भुवनेश्वर्यै नमः ।
ॐ अम्बिकायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ अनादिनिधनायै नमः ।

ॐ हरिब्रह्मेन्द्रसेवितायै नमः ।

ॐ नारायण्यै नमः ।

ॐ नादरूपायै नमः ।

ॐ नामरूपविवर्जितायै नमः॥३००॥

ॐ ह्रींकार्यै नमः ।

ॐ ह्रीमत्यै नमः ।

ॐ हृद्यायै नमः ।

ॐ हेयोपादेयवर्जितायै नमः ।

ॐ रामराजार्चितायै नमः ।

ॐ राज्ञ्यै नमः ।

ॐ रम्यायै नमः ।

ॐ राजीवलोचनायै नमः ।

ॐ रञ्जन्यै नमः ।

ॐ रमण्यै नमः ॥ ३१० ॥

ॐ रम्यायै नमः ।

ॐ रणत्किङ्किणिमेखलायै नमः ।

ॐ रमायै नमः ।

ॐ राकेन्दुवदनायै नमः ।

ॐ रतिरूपायै नमः ।

ॐ रतिप्रियायै नमः ।

ॐ रक्षाकर्त्र्यै नमः ।

ॐ राक्षसघ्न्यै नमः ।

ॐ रामायै नमः ।

ॐ रमणलम्पटायै नमः ॥ ३२० ॥

ॐ काम्यायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ कामकलारूपायै नमः ।
ॐ कदम्बकुसुमप्रियायै नमः ।
ॐ कल्याण्यै नमः ।
ॐ जगतीकन्दायै नमः ।
ॐ करुणारससागरायै नमः ।
ॐ कलावत्यै नमः ।
ॐ कलालापायै नमः ।
ॐ कान्तायै नमः ।
ॐ कादम्बरीप्रियायै नमः ॥३३०॥
ॐ वरदायै नमः ।
ॐ वामनयनायै नमः ।
ॐ वारुणीमदविह्वलायै नमः ।

ॐ वेदविद्यायै नमः ।
ॐ विन्ध्याचलनिवासिन्यै नमः ।
ॐ विधात्र्यै नमः ।
ॐ वेदजनन्यै नमः ।
ॐ विष्णुमायायै नमः ।
ॐ विलासिन्यै नमः ।
ॐ क्षेत्रस्वरूपायै नमः ।
ॐ क्षेत्रेश्यै नमः ।
ॐ क्षेत्रक्षेत्रज्ञपालिन्यै नमः ।
ॐ क्षयवृद्धिविनिर्मुक्तायै नमः ।
ॐ क्षेत्रपालसमर्चितायै नमः ।
ॐ विजयायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ वन्द्यायै नमः ।
ॐ वन्दारुजनवत्सलायै नमः ।
ॐ वाग्वादिन्यै नमः ॥ ३५० ॥
ॐ वाकेश्यै नमः ।
ॐ वह्निमण्डलवासिन्यै नमः ।
ॐ भक्तिमत्कल्पलतिकायै नमः ।
ॐ पशुपाशविमोचन्यै नमः ।
ॐ संहृताशेषपाषण्डायै नमः ।
ॐ सदाचारप्रवर्तिकायै नमः ।
ॐ तापत्रयाग्निसन्तप्तसमाह्लादन-
चन्द्रिकायै नमः ।
ॐ तरुण्यै नमः ।
ॐ तापसाराध्यै नमः ।

ॐ तनुमध्यायै नमः ॥ ३६० ॥
ॐ तमोपहायै नमः ।
ॐ चित्यै नमः ।
ॐ तत्पदलक्ष्यार्थायै नमः ।
ॐ चिदेकरसरूपिण्यै नमः ।
ॐ स्वात्मानन्दलवीभूतब्रह्मा-
द्यानन्दसन्तत्यै नमः ।
ॐ परायै नमः ।
ॐ प्रत्यक्चितीरूपायै नमः ।
ॐ पश्यन्त्यै नमः ।
ॐ परदेवतायै नमः ।
ॐ मध्यमायै नमः । ॥ ३७० ॥
ॐ वैखरीरूपायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ भक्तमानसहंसिकायै नमः ।
ॐ कामेश्वरप्राणनाड्यै नमः ।
ॐ कृतज्ञायै नमः ।
ॐ कामपूजितायै नमः ।
ॐ शृङ्गाररससम्पूर्णायै नमः ।
ॐ जयायै नमः ।
ॐ जालन्धरस्थितायै नमः ।
ॐ ओड्याणपीठनिलयायै नमः ।
ॐ बिन्दुमण्डलवासिन्यै नमः ॥३८०॥
ॐ रहोयागक्रमाराध्यायै नमः ।
ॐ रहस्तर्पणतर्पितायै नमः ।
ॐ सद्यःप्रसादिन्यै नमः ।

ॐ साक्षिवर्जितायै नमः ।
ॐ षडङ्गदेवतायुक्तायै नमः ।
ॐ षड्गुण्यपरिपूरितायै नमः ।
ॐ नित्यक्लिन्नायै नमः ।
ॐ निरुपमायै नमः ।
ॐ निर्वाणसुखदायिन्यै नमः ॥३९०॥
ॐ नित्याषोडशिकारूपायै नमः ।
ॐ श्रीकण्ठार्धशरीरिण्यै नमः ।
ॐ प्रभावत्यै नमः ।
ॐ प्रभारूपायै नमः ।
ॐ प्रसिद्धायै नमः ।
ॐ परमेश्वर्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ अव्यक्तायै नमः ।
ॐ व्यक्ताव्यक्तस्वरूपिण्यै नमः ।
ॐ व्यापिन्यैं नमः ॥ ४०० ॥
ॐ विविधाकारायै नमः ।
ॐ विद्याविद्यास्वरूपिण्यै नमः ।
ॐ महाकामेशनयनकुमुदाह्लाद-
कौमुद्यै नमः ।
ॐ भक्तहार्दतमोभेदभानुमद्भानु-
सन्तत्यै नमः ।
ॐ शिवदूत्यै नमः ।
ॐ शिवाराध्यायै नमः ।
ॐ शिवमूर्त्यै नमः ।
ॐ शिवङ्कर्यै नमः ।

ॐ शिवप्रियायै नमः ।
ॐ शिवपरायै नमः ॥ ४१० ॥
ॐ शिष्टेष्टायै नमः ।
ॐ शिष्टपूजितायै नमः ।
ॐ अप्रमेयायै नमः ।
ॐ स्वप्रकाशायै नमः ।
ॐ मनोवाचमगोचरायै नमः ।
ॐ चिच्छक्त्यै नमः ।
ॐ चेतनारूपायै नमः ।
ॐ जडशक्त्यै नमः ।
ॐ जडात्मिकायै नमः ।
ॐ गायत्र्यै नमः । ॥ ४२० ॥
ॐ व्याहृत्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ सन्ध्यायै नमः ।
ॐ द्विजवृन्दनिषेवितायै नमः ।
ॐ तत्त्वासनायै नमः ।
ॐ तत्त्वमय्यै नमः ।
ॐ पञ्चकोशान्तरस्थितायै नमः ।
ॐ निःसीममहिम्ने नमः ।
ॐ नित्ययौवनायै नमः ।
ॐ मदशालिन्यै नमः ।
ॐ मदघूर्णितरक्ताक्ष्यै नमः ॥४३०॥
ॐ मदपाटलगण्डभुवे नमः ।
ॐ चन्दनद्रवदिग्धाङ्ग्यै नमः ।
ॐ चाम्पेयकुसुमप्रियायै नमः ।
ॐ कुशलायै नमः ।

ॐ कोमलाकारायै नमः ।
ॐ कुरुकुल्लायै नमः ।
ॐ कुलेश्वर्यै नमः ।
ॐ कुलकुण्डालयायै नमः ।
ॐ कौलमार्गतत्परसेवितायै नमः ।
ॐ कुमारगणनाथाम्बायै नमः ४४०
ॐ तुष्ट्यै नमः ।
ॐ पुष्ट्यै नमः ।
ॐ मत्यै नमः ।
ॐ धृत्यै नमः ।
ॐ शान्त्यै नमः ।
ॐ स्वस्तिमत्यै नमः ।
ॐ कान्त्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ नन्दिन्यै नमः ।
ॐ विघ्ननाशिन्यै नमः ।
ॐ तेजोवत्यै नमः ॥ ४५० ॥
ॐ त्रिनयनायै नमः ।
ॐ लोलाक्ष्यै नमः ।
ॐ कामरूपिण्यै नमः ।
ॐ मालिन्यै नमः ।
ॐ हंसिन्यै नमः ।
ॐ मात्रे नमः ।
ॐ मलयाचलवासिन्यै नमः ।
ॐ सुमुख्यै नमः ।
ॐ नलिन्यै नमः ।
ॐ सुभ्रुवे नमः ॥ ४६० ॥
ॐ शोभनायै नमः ।
ॐ सुरनायिकायै नमः ।
ॐ कालकण्ठ्यै नमः ।
ॐ कान्तिमत्यै नमः ।
ॐ क्षोभिण्यै नमः ।
ॐ सूक्ष्मरूपिण्यै नमः ।
ॐ वज्रेश्वर्यै नमः ।
ॐ वामदेव्यै नमः ।
ॐ वयोऽवस्थाविवर्जितायै नमः ।
ॐ सिद्धेश्वर्यै नमः ॥ ४७० ॥
ॐ सिद्धविद्यायै नमः ।
ॐ सिद्धमात्रे नमः ।
ॐ यशस्विन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ विशुद्धिचक्रनिलयायै नमः ।
ॐ आरक्तवर्णायै नमः ।
ॐ त्रिलोचनायै नमः ।
ॐ खट्वाङ्गादिप्रहरणायै नमः ।
ॐ वदनैकसमन्वितायै नमः ।
ॐ पायसान्नप्रियायै नमः ।
ॐ त्वक्स्थायै नमः ॥ ४८० ॥
ॐ पशुलोकभयङ्कर्यै नमः ।
ॐ अमृतादिमहाशक्तिसंवृतायै नमः ।
ॐ डाकिनीश्वर्यै नमः ।
ॐ अनाहताब्जनिलयायै नमः ।
ॐ श्यामाभायै नमः ।
ॐ वदनद्वयायै नमः ।
ॐ दंष्ट्रोज्ज्वलायै नमः ।
ॐ अक्षमालादिधरायै नमः ।
ॐ रुधिरसंस्थितायै नमः ।
ॐ कालरात्र्यादिशक्त्यौघवृतायै नमः ॥ ४९० ॥
ॐ स्निग्धौदनप्रियायै नमः ।
ॐ महावीरेन्द्रवरदायै नमः ।
ॐ राकिण्यम्बास्वरूपिण्यै नमः ।
ॐ मणिपूराब्जनिलयायै नमः ।
ॐ वदनत्रयसंयुतायै नमः ।
ॐ वज्रादिकायुधोपेतायै नमः ।
ॐ डामर्यादिभिरावृतायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ रक्तवर्णायै नमः ।
ॐ मांसनिष्ठायै नमः ।
ॐ गुडान्नप्रीतमानसायै
नमः ॥ ५०० ॥
ॐ समस्तभक्तसुखदायै नमः ।
ॐ लाकिन्यम्बास्वरूपिण्यै नमः ।
ॐ स्वाधिष्ठानाम्बुजगतायै नमः ।
ॐ चतुर्वक्त्रमनोहरायै नमः ।
ॐ शूलाद्यायुधसम्पन्नायै नमः ।
ॐ पीतवर्णायै नमः ।
ॐ अतिगर्वितायै नमः ।
ॐ मेदोनिष्ठायै नमः ।
ॐ मधुप्रीतायै नमः ।

ॐ बन्धिन्यादिसमन्वितायै
नमः ॥ ५१० ॥
ॐ दध्यन्नासक्तहृदयायै नमः ।
ॐ काकिनीरूपधारिण्यै नमः ।
ॐ मूलाधाराम्बुजारूढाय नमः ।
ॐ पञ्चवक्त्रायै नमः ।
ॐ अस्थिसंस्थितायै नमः ।
ॐ अङ्कुशादिप्रहरणायै नमः ।
ॐ वरदादिनिषेवितायै नमः ।
ॐ मुद्गौदनासक्तचित्तायै नमः ।
ॐ साकिन्यम्बास्वरूपिण्यै नमः ।
ॐ आज्ञाचक्राब्जनिलयायै
नमः ॥ ५२० ॥

CC-0. Prof Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ शुक्लवर्णायै नमः ।
ॐ षडाननायै नमः ।
ॐ मज्जासंस्थायै नमः ।
ॐ हंसवत्यै नमः ।
ॐ मुख्यशक्तिसमन्वितायै नमः ।
ॐ हरिद्रान्नैकरसिकायै नमः ।
ॐ हाकिनीरूपधारिण्यै नमः ।
ॐ सहस्रदलपद्मस्थायै नमः ।
ॐ सर्ववर्णोपशोभितायै नमः ।
ॐ सर्वायुधधरायै नमः ॥ ५३० ॥
ॐ शुक्लसंस्थितायै नमः ।
ॐ सर्वतोमुख्यै नमः ।
ॐ सर्वौदनप्रीतचित्तायै नमः ।
ॐ याकिन्यम्बास्वरूपिण्यै नमः ।
ॐ स्वाहायै नमः ।
ॐ स्वधायै नमः ।
ॐ मत्यै नमः ।
ॐ मेधायै नमः ।
ॐ श्रुत्यै नमः ।
ॐ स्मृत्यै नमः । ॥ ५४० ॥
ॐ अनुत्तमायै नमः ।
ॐ पुण्यकीर्त्यै नमः ।
ॐ पुण्यलभ्यायै नमः ।
ॐ पुण्यश्रवणकीर्तनायै नमः ।
ॐ पुलोमजार्चितायै नमः ।
ॐ बन्धमोचन्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ बर्बरालकायै नमः ।
ॐ विमर्शरूपिण्यै नमः ।
ॐ विद्यायै नमः ।
ॐ वियदादिजगत्प्रसवे नमः ॥५५०॥
ॐ सर्वव्याधिप्रशमन्यै नमः ।
ॐ सर्वमृत्युनिवारिण्यै नमः ।
ॐ अग्रगण्यायै नमः ।
ॐ अचिन्त्यरूपायै नमः ।
ॐ कलिकल्मषनाशिन्यै नमः ।
ॐ कात्यायन्यै नमः ।
ॐ कालहन्त्र्यै नमः ।
ॐ कमलाक्षनिषेवितायै नमः ।
ॐ ताम्बूलपूरितमुख्यै नमः ।

ॐ दाडिमीकुसुमप्रभायै नमः ॥५६०॥
ॐ मृगाक्ष्यै नमः ।
ॐ मोहिन्यै नमः ।
ॐ मुख्यायै नमः ।
ॐ मृडान्यै नमः ।
ॐ मित्ररूपिण्यै नमः ।
ॐ नित्यतृप्तायै नमः ।
ॐ भक्तनिधये नमः ।
ॐ नियन्त्र्यै नमः ।
ॐ निखिलेश्वर्यै नमः ।
ॐ मैत्र्यादिवासनालभ्यायै नमः ॥५७०॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ महाप्रलयसाक्षिण्यै नमः ।
ॐ पराशक्त्यै नमः ।
ॐ परानिष्ठायै नमः ।
ॐ प्रज्ञानघनरूपिण्यै नमः ।
ॐ माध्वीपानालसायै नमः ।
ॐ मत्तायै नमः ।
ॐ मातृकावर्णरूपिण्यै नमः ।
ॐ महाकैलासनिलयायै नमः ।
ॐ मृणालमृदुदोर्लतायै नमः ।
ॐ महनीयायै नमः ॥ ५८० ॥
ॐ दयामूर्त्यै नमः ।
ॐ महासाम्राज्यशालिन्यै नमः ।
ॐ आत्मविद्यायै नमः ।
ॐ महाविद्यायै नमः ।
ॐ श्रीविद्यायै नमः ।
ॐ कामसेवितायै नमः ।
ॐ श्री षोडशाक्षरीविद्यायै नमः ।
ॐ त्रिकूटायै नमः ।
ॐ कामकोटिकायै नमः ।
ॐ कटाक्षकिङ्करीभूतकमला-
कोटिसेवितायै नमः ॥ ५९० ॥
ॐ शिरःस्थितायै नमः ।
ॐ चन्द्रनिभायै नमः ।
ॐ भालस्थायै नमः ।
ॐ इन्द्रधनुःप्रभायै नमः ।
ॐ हृदयस्थायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ रविप्रख्यायै नमः ।
ॐ त्रिकोणान्तरदीपिकायै नमः ।
ॐ दाक्षायण्यै नमः ।
ॐ दैत्यहन्त्र्यै नमः ।
ॐ दक्षयज्ञविनाशिन्यै
नमः ॥ ६०० ॥
ॐ दरान्दोलितदीर्घाक्ष्यै नमः ।
ॐ दरहासोज्ज्वलन्मुख्यै नमः ।
ॐ गुरुमूर्त्यै नमः ।
ॐ गुणनिधये नमः ।
ॐ गोमात्रे नमः ।
ॐ गुहजन्मभुवे नमः ।
ॐ देवेश्यै नमः ।

ॐ दण्डनीतिस्थायै नमः ।
ॐ दहराकाशरूपिण्यै नमः ।
ॐ प्रतिपन्मुख्यराकान्ततिथि-
मण्डलपूजितायै नमः ॥ ६१० ॥
ॐ कलात्मिकायै नमः ।
ॐ कलानाथायै नमः ।
ॐ काव्यालापविनोदिन्यै नमः ।
ॐ साचा रमा वाणी-सव्य-
दक्षिणसेवितायै नमः ।
ॐ आदिशक्त्यै नमः ।
ॐ अमेयायै नमः ।
ॐ आत्मने नमः ।
ॐ परमायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ पावनाकृतये नमः ।
ॐ अनेककोटिब्रह्माण्डजनन्यै नमः ॥ ६२० ॥
ॐ दिव्यविग्रहायै नमः ।
ॐ क्लींकार्यै नमः ।
ॐ केवलायै नमः ।
ॐ गुह्यायै नमः ।
ॐ कैवल्यपददायिन्यै नमः ।
ॐ त्रिपुराय नमः ।
ॐ त्रिजगद्वन्द्यायै नमः ।
ॐ त्रिमूर्त्यै नमः ।
ॐ त्रिदशेश्वर्यै नमः ।
ॐ त्र्यक्षर्यै नमः । ॥ ६३० ॥
ॐ दिव्यगन्धाढ्यायै नमः ।
ॐ सिन्दूरतिलकाञ्चितायै नमः ।
ॐ उमायै नमः ।
ॐ शैलेन्द्रतनयायै नमः ।
ॐ गौर्यै नमः ।
ॐ गन्धर्वसेवितायै नमः ।
ॐ विश्वगर्भायै नमः ।
ॐ स्वर्णगर्भायै नमः ।
ॐ अवरदायै नमः ।
ॐ वागधीश्वर्यै नमः ॥ ६४० ॥
ॐ ध्यानगम्यायै नमः ।
ॐ अपरिच्छेद्यायै नमः ।
ॐ ज्ञानदायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ ज्ञानविग्रहायै नमः ।
ॐ सर्ववेदान्तसंवेद्यायै नमः ।
ॐ सत्यानन्दस्वरूपिण्यै नमः ।
ॐ लोपामुद्रार्चितायै नमः ।
ॐ लीलाक्लृप्तब्रह्माण्डमण्डलायै नमः
ॐ अदृश्यायै नमः ।
ॐ दृश्यरहितायै नमः ॥ ६५० ॥
ॐ विज्ञात्र्यै नमः ।
ॐ वेद्यवर्जितायै नमः ।
ॐ योगिन्यै नमः ।
ॐ योगदायै नमः ।
ॐ योग्यायै नमः ।
ॐ योगानन्दायै नमः ।
ॐ युगन्धरायै नमः ।
ॐ इच्छाशक्ति ज्ञानशक्ति-
क्रियाशक्तिस्वरूपिण्यै नमः ।
ॐ सर्वाधारायै नमः ।
ॐ सुप्रतिष्ठायै नमः ॥ ६६० ॥
ॐ सदसद्रूपधारिण्यै नमः ।
ॐ अष्टमूर्त्यै नमः ।
ॐ अजाजैत्र्यै नमः ।
ॐ लोकयात्राविधायिन्यै नमः ।
ॐ एकाकिन्यै नमः ।
ॐ भूमरूपायै नमः ।
ॐ निर्द्वैतायै नमः ।
ॐ द्वैतवर्जितायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ अन्नदायै नमः ।
ॐ वसुदायै नमः । ॥ ६७० ॥
ॐ वृद्धायै नमः ।
ॐ ब्रह्मात्मैक्यस्वरूपिण्यै नमः ।
ॐ बृहत्यै नमः ।
ॐ ब्राह्मण्यै नमः ।
ॐ ब्राह्म्यै नमः ।
ॐ ब्रह्मानन्दायै नमः ।
ॐ बलिप्रियायै नमः ।
ॐ भाषारूपायै नमः ।
ॐ वृहत्सेनायै नमः ।
ॐ भावाभावविवर्जितायै
नमः ॥ ६८० ॥

ॐ सुखाराध्यायै नमः ।
ॐ शुभकर्यै नमः ।
ॐ शोभनायै नमः ।
ॐ सुलभागत्यै नमः ।
ॐ राजराजेश्वर्यै नमः ।
ॐ राज्यदायिन्यै नमः ।
ॐ राज्यवल्लभायै नमः ।
ॐ राजत्कृपायै नमः ।
ॐ राजपीठनिवेशितनिजाश्रितायै
नमः ।
ॐ राज्यलक्ष्म्यै नमः ॥ ६९० ॥
ॐ कोशनाथायै नमः ।
ॐ चतुरङ्गबलेश्वर्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ साम्राज्यदायिन्यै नमः ।
ॐ सत्यसन्धायै नमः ।
ॐ सागरमेखलायै नमः ।
ॐ दीक्षितायै नमः ।
ॐ दैत्यशमन्यै नमः ।
ॐ सर्वलोकवशङ्कर्यै नमः ।
ॐ सर्वार्थदात्र्यै नमः ।
ॐ सावित्र्यै नमः ॥ ७०० ॥
ॐ सच्चिदानन्दरूपिण्यै नमः ।
ॐ देशकालापरिच्छिन्नायै नमः ।
ॐ सर्वगायै नमः ।
ॐ सर्वमोहिन्यै नमः ।
ॐ सरस्वत्यै नमः ।
ॐ शास्त्रमय्यै नमः ।
ॐ गुहाम्बायै नमः ।
ॐ गुह्यरूपिण्यै नमः ।
ॐ सर्वोपाधिविनिर्मुक्तायै नमः ।
ॐ सदाशिवपतिव्रतायै नमः ॥ ७१० ॥
ॐ सम्प्रदायेश्वर्यै नमः ।
ॐ साध्व्यै नमः ।
ॐ गुरुमण्डलरूपिण्यै नमः ।
ॐ कुलोत्तीर्णायै नमः ।
ॐ भगाराध्यायै नमः ।
ॐ मायायै नमः ।
ॐ मधुमत्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ मह्यै नमः ।
ॐ गणाम्बायै नमः ।
ॐ गुह्यकाराध्यायै नमः ॥ ७२० ॥
ॐ कोमलाङ्ग्यै नमः ।
ॐ गुरुप्रियायै नमः ।
ॐ स्वतन्त्रायै नमः ।
ॐ सर्वतन्त्रेश्यै नमः ।
ॐ दक्षिणामूर्तिरूपिण्यै नमः ।
ॐ सनकादिसमाराध्यायै नमः ।
ॐ शिवज्ञानप्रदायिन्यै नमः ।
ॐ चित्कलायै नमः ।
ॐ आनन्दकलिकायै नमः ।
ॐ प्रेमरूपायै नमः ॥ ७३० ॥
ॐ प्रियङ्कर्यै नमः ।
ॐ नामपारायणप्रीतायै नमः ।
ॐ नन्दिविद्यायै नमः ।
ॐ नटेश्वर्यै नमः ।
ॐ मिथ्याजगदधिष्ठानायै नमः ।
ॐ मुक्तिदायै नमः ।
ॐ मुक्तिरूपिण्यै नमः ।
ॐ लास्यप्रियायै नमः ।
ॐ लयकर्यै नमः ।
ॐ लज्जायै नमः ॥ ७४० ॥
ॐ रम्भादिवन्दितायै नमः ।
ॐ भवदावसुधावृष्ट्यै नमः ।
ॐ पापारण्यदवानलायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ दौर्भाग्यतूलवातूलायै नमः ।
ॐ जराध्वान्तरविप्रभायै नमः ।
ॐ भाग्याब्धिचन्द्रिकायै नमः ।
ॐ भक्तचित्तकेकिघनाघनायै नमः ।
ॐ रोगपर्वतदम्भोलये नमः ।
ॐ मृत्युदारुकुठारिकायै नमः ।
ॐ महेश्वर्यै नमः ॥ ७५० ॥
ॐ महाकाल्यै नमः ।
ॐ महाग्रासायै नमः ।
ॐ महाशनायै नमः ।
ॐ अपर्णायै नमः ।
ॐ चण्डिकायै नमः ।
ॐ चण्डमुण्डासुरनिषूदिन्यै नमः ।
ॐ क्षराक्षरात्मिकायै नमः ।
ॐ सर्वलोकेश्यै नमः ।
ॐ विश्वधारिण्यै नमः ।
ॐ त्रिवर्गदात्र्यै नमः ॥ ७६० ॥
ॐ सुभगायै नमः ।
ॐ त्र्यम्बकायै नमः ।
ॐ त्रिगुणात्मिकायै नमः ।
ॐ स्वर्गापवर्गदायै नमः ।
ॐ शुद्धायै नमः ।
ॐ जपापुष्पनिभाकृतये नमः ।
ॐ ओजोवत्यै नमः ।
ॐ द्युतिधरायै नमः ।
ॐ यज्ञरूपायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ प्रियव्रतायै नमः ॥ ७७० ॥
ॐ दुराराध्यायै नमः ।
ॐ दुराधर्षायै नमः ।
ॐ पाटलीकुसुमप्रियायै नमः ।
ॐ महत्यै नमः ।
ॐ मेरुनिलयायै नमः ।
ॐ मन्दारकुसुमप्रियायै नमः ।
ॐ वीरराध्यायै नमः ।
ॐ विराड्रूपायै नमः ।
ॐ विरजायै नमः ।
ॐ विश्वतोमुख्यै नमः ॥ ७८० ॥
ॐ प्रत्यग्रूपायै नमः ।
ॐ पराकाशायै नमः ।

ॐ प्राणदायै नमः ।
ॐ प्राणरूपिण्यै नमः ।
ॐ मार्ताण्डभैरवाराध्यायै नमः ।
ॐ मन्त्रिणीन्यस्तराज्यधुरे नमः ।
ॐ त्रिपुरेश्यै नमः ।
ॐ जयत्सेनायै नमः ।
ॐ निस्त्रैगुण्यायै नमः ।
ॐ परापरायै नमः ॥ ७९० ॥
ॐ सत्यज्ञानानन्दरूपायै नमः ।
ॐ सामरस्यपरायणायै नमः ।
ॐ कपर्दिन्यै नमः ।
ॐ कलामालायै नमः ।
ॐ कामदुघे नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ कामरूपिण्यै नमः ।
ॐ कलानिधये नमः ।
ॐ काव्यकलायै नमः ।
ॐ रसज्ञायै नमः ।
ॐ रसशेवधये नमः ॥ ८०० ॥
ॐ पुष्टायै नमः ।
ॐ पुरातनायै नमः ।
ॐ पूज्यायै नमः ।
ॐ पुष्करायै नमः ।
ॐ पुष्करेक्षणायै नमः ।
ॐ परस्मै ज्योतिषे ।
ॐ परस्मै धाम्ने नमः ।
ॐ परमाणवे नमः ।
ॐ परात्परायै नमः ।
ॐ पाशहस्तायै नमः ॥ ८१० ॥
ॐ पाशहन्त्र्यै नमः ।
ॐ परमन्त्रविभेदिन्यै नमः ।
ॐ मूर्तायै नमः ।
ॐ अमूर्तायै नमः ।
ॐ अनित्यतृप्तायै नमः ।
ॐ मुनिमानसहंसिकायै नमः ।
ॐ सत्यव्रतायै नमः ।
ॐ सत्यरूपायै नमः ।
ॐ सर्वान्तर्यामिन्यै नमः ।
ॐ सत्यै नमः ॥ ८२० ॥
ॐ ब्रह्माण्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ ब्रह्मजनन्यै नमः ।
ॐ बहुरूपायै नमः ।
ॐ बुधार्चितायै नमः ।
ॐ प्रसवित्र्यै नमः ।
ॐ प्रचण्डायै नमः ।
ॐ आज्ञायै नमः ।
ॐ प्रतिष्ठायै नमः ।
ॐ प्रकटाकृतये नमः ।
ॐ प्राणेश्वर्यै नमः ॥ ८३० ॥
ॐ प्राणदात्र्यै नमः ।
ॐ पञ्चाशत्पीठरूपिण्यै नमः ।
ॐ विशृङ्खलायै नमः ।
ॐ विविक्तस्थायै नमः ।

ॐ वीरमात्रे नमः ।
ॐ वियत्प्रसवे नमः ।
ॐ मुकुन्दायै नमः ।
ॐ मुक्तिनिलयायै नमः ।
ॐ मूलविग्रहरूपिण्यै नमः ।
ॐ भावज्ञायै नमः ॥ ८४० ॥
ॐ भवरोगघ्न्यै नमः ।
ॐ भवचक्रप्रवर्तिन्यै नमः ।
ॐ छन्दःसारायै नमः ।
ॐ शास्त्रसारायै नमः ।
ॐ मन्त्रसारायै नमः ।
ॐ तलोदर्यै नमः ।
ॐ उदारकीर्तये नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ उद्दामवैभवायै नमः ।
ॐ वर्णरूपिण्यै नमः ।
ॐ जन्ममृत्युजरातप्तजनविश्रान्ति-
दायिन्यै नमः ॥ ८५० ॥
ॐ सर्वोपनिषदुद्घुष्टायै नमः ।
ॐ शान्त्यतीतायै नमः ।
ॐ कलात्मिकायै नमः ।
ॐ गम्भीरायै नमः ।
ॐ गगनान्तःस्थायै नमः ।
ॐ गर्वितायै नमः ।
ॐ गानलोलुपायै नमः ।
ॐ कल्पनारहितायै नमः ।
ॐ काष्ठायै नमः ।

ॐ अकान्तायै नमः ॥ ८६० ॥
ॐ कान्तार्धविग्रहायै नमः ।
ॐ कार्यकारणनिर्मुक्तायै नमः ।
ॐ कामकेलितरङ्गितायै नमः ।
ॐ कनत्कनकताटङ्कायै नमः ।
ॐ लीलाविग्रहधारिण्यै नमः ।
ॐ अजायै नमः ।
ॐ क्षयविनिर्मुक्तायै नमः ।
ॐ मुग्धायै नमः ।
ॐ शिप्रप्रसादिन्यै नमः ।
ॐ अन्तर्मुखसमाराध्यायै नमः ८७०
ॐ बहिर्मुखसुदुर्लभायै नमः ।
ॐ त्रय्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ त्रिवर्गनिलयायै नमः ।
ॐ त्रिस्थायै नमः ।
ॐ त्रिपुरमालिन्यै नमः ।
ॐ निरामयायै नमः ।
ॐ निरालम्बायै नमः ।
ॐ स्वात्मारामायै नमः ।
ॐ सुधासृत्यै नमः ।
ॐ संसारपङ्कनिर्मग्नसमुद्धरण-
पण्डितायै नमः ॥ ८८० ॥
ॐ यज्ञप्रियायै नमः ।
ॐ यज्ञकर्त्र्यै नमः ।
ॐ यजमानस्वरूपिण्यै नमः ।

ॐ धनाध्यक्षायै नमः ।
ॐ धनधान्यविवर्धिन्यै नमः ।
ॐ विप्रप्रियायै नमः ।
ॐ विप्ररूपायै नमः ।
ॐ विश्वभ्रमणकारिण्यै नमः ।
ॐ विश्वग्रासायै नमः ॥ ८९० ॥
ॐ विद्रुमाभायै नमः ।
ॐ वैष्णव्यै नमः ।
ॐ विष्णुरूपिण्यै नमः ।
ॐ अयोनये नमः ।
ॐ योनिनिलयायै नमः ।
ॐ कूटस्थायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ वीरगोष्ठीप्रियायै नमः ।
ॐ वीरायै नमः ।
ॐ नैष्कर्म्यायै नमः ॥ ९०० ॥
ॐ नादरूपिण्यै नमः ।
ॐ विज्ञानकलनायै नमः ।
ॐ कल्यायै नमः ।
ॐ विदग्धायै नमः ।
ॐ बैन्दवासनायै नमः ।
ॐ तत्त्वाधिकायै नमः ।
ॐ तत्त्वमय्यै नमः ।
ॐ तत्त्वमर्थस्वरूपिण्यै नमः ।
ॐ सामगानप्रियायै नमः ।
ॐ सौम्यायै नमः ॥ ९१० ॥

ॐ सदाशिवकुटुम्बिन्यै नमः ।
ॐ सव्यापसव्यमार्गस्थायै नमः ।
ॐ सर्वापद्विनिवारिण्यै नमः ।
ॐ स्वस्थायै नमः ।
ॐ स्वभावमधुरायै नमः ।
ॐ धीरायै नमः ।
ॐ धीरसमर्चितायै नमः ।
ॐ चैतन्यार्घ्यसमाराध्यायै नमः ।
ॐ चैतन्यकुसुमप्रियायै नमः ।
ॐ सदोदितायै नमः ॥ ९२० ॥
ॐ सदातुष्टायै नमः ।
ॐ तरुणादित्यपाटलायै नमः ।
ॐ दक्षिणादक्षिणाराध्यायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ दरस्मेरमुखाम्बुजायै नमः ।
ॐ कौलिनीकेवलायै नमः ।
ॐ अनर्घ्यकैवल्यपददायिन्यै नमः ।
ॐ स्तोत्रप्रियायै नमः ।
ॐ स्तुतिमत्यै नमः ।
ॐ श्रुतिसंस्तुतवैभवायै नमः ।
ॐ मनस्विन्यै नमः ॥ ९३० ॥
ॐ मानवत्यै नमः ।
ॐ महेश्यै नमः ।
ॐ मङ्गलाकृत्यै नमः ।
ॐ विश्वमात्रे नमः ।
ॐ जगद्धात्र्यै नमः ।
ॐ विशालाक्ष्यै नमः ।
ॐ विरागिण्यै नमः ।
ॐ प्रगल्भायै नमः ।
ॐ परमोदारायै नमः ।
ॐ परामोदायै नमः ॥ ९४० ॥
ॐ मनोमय्यै नमः ।
ॐ व्योमकेश्यै नमः ।
ॐ विमानस्थायै नमः ।
ॐ वज्रिण्यै नमः ।
ॐ वामकेश्वर्यै नमः ।
ॐ पञ्चयज्ञप्रियायै नमः ।
ॐ पञ्चप्रेतमञ्चाधिशायिन्यै नमः ।
ॐ पञ्चम्यै नमः ।
ॐ पञ्चभूतेश्यै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ पञ्चसङ्ख्योपचारिण्यै नमः ९५०
ॐ शाश्वत्यै नमः ।
ॐ शाश्वतैश्वर्यायै नमः ।
ॐ शर्मदायै नमः ।
ॐ शम्भुमोहिन्यै नमः ।
ॐ धरायै नमः ।
ॐ धरसुतायै नमः ।
ॐ धन्यायै नमः ।
ॐ धर्मिण्यै नमः ।
ॐ धर्मवर्धिन्यै नमः ।
ॐ लोकातीतायै नमः ॥ ९६० ॥
ॐ गुणातीतायै नमः ।
ॐ सर्वातीतायै नमः ।
ॐ शमात्मिकायै नमः ।
ॐ बन्धूककुसुमप्रख्यायै नमः ।
ॐ बालायै नमः ।
ॐ लीलाविनोदिन्यै नमः ।
ॐ सुमङ्गल्यै नमः ।
ॐ सुखकर्यै नमः ।
ॐ सुवेषाढ्यायै नमः ।
ॐ सुवासिन्यै नमः ॥ ९७० ॥
ॐ सुवासिन्यर्चनप्रीतायै नमः ।
ॐ आशोभनायै नमः ।
ॐ शुद्धमानसायै नमः ।
ॐ बिन्दुतर्पणसन्तुष्टायै नमः ।
ॐ पूर्वजायै नमः ।

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

ॐ त्रिपुराम्बिकायै नमः ।
ॐ दशमुद्रासमाराध्यायै नमः ।
ॐ त्रिपुराश्रीवशङ्कर्यै नमः ।
ॐ ज्ञानमुद्रायै नमः ।
ॐ ज्ञानगम्यायै नमः ॥ ९८० ॥
ॐ ज्ञानज्ञेयस्वरूपिण्यै नमः ।
ॐ योनिमुद्रायै नमः ।
ॐ त्रिखण्डेश्यै नमः ।
ॐ त्रिगुणायै नमः ।
ॐ अम्बायै नमः ।
ॐ त्रिकोणगायै नमः ।
ॐ अनघायै नमः ।
ॐ अद्भुतचारित्रायै नमः ।

ॐ वाञ्छितार्थप्रदायिन्यै नमः ।
ॐ अभ्यासातिशयज्ञातायै नमः ९९०
ॐ षडध्वातीतरूपिण्यै नमः ।
ॐ अव्याजकरुणामूर्तये नमः ।
ॐ अज्ञानध्वान्तदीपिकायै नमः ।
ॐ आबालगोपविदितायै नमः ।
ॐ सर्वानुल्लङ्घ्यशासनायै नमः ।
ॐ श्रीचक्रराजनिलयायै नमः ।
ॐ श्रीमत्त्रिपुरसुन्दर्यै नमः ।
ॐ श्रीशिवायै नमः ।
ॐ शिवशक्त्यैक्यरूपिण्यै नमः ।
ॐ ऐं ह्रीं श्रीं ललिताम्बिकायै
नमः ॥ १००० ॥

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

## स्तोत्र-ग्रन्थाः

१ शिवमहिम्नस्तोत्रम् । शिवताण्डवस्तोत्रं, द्वादशज्योतिर्लिङ्गस्तोत्रं, शिवपञ्चाक्षरस्तोत्रं तथा शिवषडक्षरस्तोत्रसहितञ्च ।

२ शिवमहिम्नःस्तोत्रम् । मूल संस्कृत, अन्वय, हिन्दी तथा अंग्रेजी भाषान्तर के सहित । व्याख्याकार—लक्ष्मीनारायण ओंकारलाल जोशी ।

३ शिवमहिम्नस्तोत्रम् । हिन्दी भाषान्तर सहित । व्याख्याकार—लक्ष्मीनारायण ओंकारलाल जोशी ।

४ अर्धनारीश्वरस्तोत्रम् । अर्धनारीश्वरस्तुति, श्रीमदर्धनारीश्वराष्टोत्तरशत-नामावलिसहितञ्च

५ रामरक्षास्तोत्रम् । श्रीबुधकौशिकऋषिविरचितम् ।

६ ऋणमोचकमङ्गलस्तोत्रम् ।

७ दक्षिणामूर्तिस्तोत्रम् । श्रीशङ्कराचार्यविरचितम् ।

८ ऋग्वेदोक्तं श्रीसूक्तम् । हिन्दी-मन्त्रार्थ सहितं ( लक्ष्मीपूजनविधि-श्रीसूक्त-सम्पुटितपुरश्चरणविधि-वेदोक्तलक्ष्मी सूक्तपुराणोक्तश्रीसूक्त धनदास्तोत्र-धनदाकवचादिसहितम् )

CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA

९ कालीकवचम् । श्रीमहाकालीस्तोत्रम्, कालीशतनामस्तोत्रसहितम् ।
१० सौन्दर्यलहरी । श्रीमच्छङ्करभगवत्पादविरचिता
११ गङ्गालहरी । श्रीपण्डितराजजगन्नाथविरचिता । अमृतलहरी;
गङ्गाष्टकम् सहित
१२ महालक्ष्मीस्तोत्रम् । श्रीअगस्ति विरचितम् । विविध छन्दों में महालक्ष्मी
के नव स्तोत्रों सहित
१३ सिद्धसरस्वतीस्तोत्रम् । श्रीब्रह्मा विरचितम् । विविध । छन्दों से
सरस्वती के दस स्तोत्रों का संग्रह
१४ अन्नपूर्णास्तोत्रम् । श्रीशंकराचार्यविरचितम् । लक्ष्मीलहरी तथा
सङ्कटाष्टकम् सहित
१५ सन्तानगोपालस्तोत्रम् । लक्ष्मीकेशव-सम्वादे श्रीवासुदेव प्रोक्तम् ।
श्रीकृष्णाष्टकम् सहित
१६ अपराजितास्तोत्रम् । श्रीमार्कण्डेयमुनि विरचितम्
CC-0. Prof. Satya Vrat Shastri Collection, New Delhi. Digitized by S3 Foundation USA
१७ श्रीसूक्तम् । ( लक्ष्मीसूक्त [illegible] )